॥ द्वयोपनिषत् ॥

ॐ अथातः श्रीमदद्वयोत्पत्तिः ।
वाक्यो द्वितीयः । षट्पदान्यष्टादश ।
पञ्चविंशत्यक्षराणि । पञ्चदशाक्षरं पूर्वम् ।
दशाक्षरं परम् । पूर्वो नारायणः
प्रोक्तोऽनादिसिद्धो मन्त्ररत्नः सदाचार्यमूलः ।
आचार्यो वेदसम्पन्नो विष्णुभक्तो विमत्सरः ।
मन्त्रज्ञो मन्त्रभक्तश्च सदामन्त्राश्रयः शुचिः ॥

गुरुभक्तिसमायुक्तः पुराणज्ञो विशेषवित् ।
एवं लक्षणसम्पन्नो गुरुरित्यभिधीयते ॥

आचिनोति हि शास्त्रार्थानाचारस्थापनादपि ।
स्वयमाचरते यस्तु तस्मादाचार्य उच्यते ॥

गुशब्दस्त्वन्धकारः स्यात् रुशब्दस्तन्निरोधकः ।
अन्धकारनिरोधित्वाद्गुरुरित्यभिधीयते ॥

गुरुरेव परं ब्रह्म गुरुरेव परा गतिः ।
गुरुरेव परं विद्या गुरुरेव परं धनम् ॥

गुरुरेव परः कामः गुरुरेव परायणः ।
यस्मात्तदुपदेष्टासौ तस्माद्गुरुतरो गुरुः ॥

यस्सकृदुच्चारणः संसारविमोचनो भवति ।
सर्वपुरुषार्थसिद्धिर्भवति ।
न च पुनरावर्तते न च पुनरावर्तत इति ।
य एवं वेदेत्युपनिषत् ॥

इति द्वयोपनिषत् समाप्ता ।